॥ वेदाः सर्व हितार्थयाय ॥

# शुक्ल यजुर्वेदीय संध्योपासना विधिः

## प्रातः स्मरण वेदव्यास वंदना यज्ञोपवीत धारणविधि सहितस्य



आचार्योच्चारण अनुच्चारण पूर्वकं वेदाक्षरराशि ग्रहणमध्ययनम् ॥

॥ वेदाः सर्व हितार्थयाय ॥

# शुक्ल यजुर्वेदीय संध्योपासना विधिः

प्रातः स्मरण वेदव्यास वंदना यज्ञोपवीत धारणविधि सहितस्य


संकलन कर्ता -

## वे मू आचार्य शुभम शर्मा

(प्राचार्य : देवी अहिल्या वेद विद्यालय)



प्राप्ति स्थान :

देवी अहिल्या वेद विद्यालय, रेवती रेंज , सांवेर रोड अरोबिंदों अस्पताल के पास इंदौर (मध्य प्रदेश) पिन ४५३१११

संपर्क : 8285873083

# ॥ प्रातः स्मरण ॥

वसुदेवसुतं देवं कंसचाणूरमर्दनम् ।

देवकीपरमानंदं कृष्णं वंदे  जगद्गुरुम् ॥१॥

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।

गुरुश्च शुक्रःशनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥२॥

महेन्द्रो मलयः सह्यो देवतात्मा हिमालयः ।

ध्येयो रैवतको विन्ध्यो गिरिश्चारावलिस्तथा ॥३॥

गंगा सिंधुश्च कावेरी यमुना च सरस्वती ।

रेवा महानदी गोदा ब्रह्मपुत्रः पुनातु माम् ॥४॥

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।

पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥५॥

चतुर्वेदाः पुराणानि सर्वोपनिषदस्तथा ।

रामायणं भारतं च गीता षड् दर्शनानि च ॥६॥

सर्वेऽवताराः ऋषयः वीराः सत्पुरुषास्तथा ।

आचार्याः भारतोत्पन्ना वंदनीयाः निरन्तरम् ॥७॥

ज्ञानिनो  दानिनश्चैव कवयश्च पतिव्रताः ।

स्मरणीयाः सदैवैते समाजोद्धारकास्तथा ॥८॥

समर्थः शंकराचार्यः विवेकानन्द एव च ।

एतेषां स्मरणान्नित्यं आविर्भवति पौरुषम   ॥९॥

रत्नाकराधौतपदां हिमालयकिरीटिनीम् ।

ब्रह्म-राजर्षिरत्नाढ्यां वंन्दे भारतमातरम् ॥१०॥

एततद्देशप्रसूतस्य सकाशादग्रजन्मनः।

स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥११॥

॥ भारत माता की जय ॥

******

## श्री वेदव्यास वंदना

नमो नमस्ते व्यास गुरो जयनिगमा गम कल्पतरो ।
नमो नमस्ते व्यास गुरो जयनिगमा गम कल्पतरो ।

कुरुकुल कलह कथाति विचितत्रा सुमधुर भगवद्गीता मंत्रा।
भागवती गाथा च पवित्रा त्वया गुम्फिता सुकविगुरो ॥ जय निगमा ॥ धृ ॥

वेदारण्यकसमा रोपणं उपनिषदमृतो दधि निर्मंथनम्
पुराण मंदिर पारी निर्माणं त्वया कृतं हे जगद्गुरो ॥ जय निगमा ॥ धृ ॥

विश्वं सकलं व्यासोच्छिष्टं शिष्ट वचनमिदमर्थ विशिष्टम् ।
सत्यं तथ्यं महता मिष्टं सकल गुरूणामादि गुरो ॥ जय निगमा ॥ धृ ॥

अचतुर्वदनो विश्व विधाता द्विभुजो हरि रसि परि पालयिता ।
अभाल नयनो शिव संहर्ता त्वमेव भगवन् विश्व गुरो ॥ जय निगमा ॥ धृ ॥

नमोऽस्तु वेदव्यासाय यस्य वाङ्मय तेजसा।

स बाह्याभ्यंतरं विश्वं संजातं जनगोचरम् ॥

**श्री वेदव्यास भगवान की जय**

# सन्ध्योपासनविधिः

ॐ मंगलं भगवान् विष्णुः मंगलं गरुडध्वजः।

मंगलं पुण्डरीकाक्षः मंगलाय तनो हरिः।।

मानोस्तोकऽइति मन्त्रस्य कुत्स ऋषिः जगतीच्छन्दः एको रुद्रो देवता शिखा बन्धने विनियोगः।

**ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोअश्वेषुरीरिषः।**

**मानोवीरान्रुद्रभामिनोवधीर्हविष्मन्तःसदमित्वा हवामहे ।।**

इत्यंगुष्ठमात्रां शिखां नैर्ऋत्यां बध्नीयात्

**पवित्रधारणम्-**

सव्यहस्ते कुशाद्वयं दक्षिणहस्ते कुशात्रयं धारयेत् -

**ॐ पवित्रेस्थोवैष्णव्यौसवितुर्वःप्रसव ऽउत्पुनाम्यच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ।**

**तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ।।**

अनामिकयोः एकैकं पवित्रं धारयेत्-

**भस्मना त्रिपुण्ड्रधारणम्**

ॐ अग्निरितिभस्मः वायुरितिभस्मः जलमितिभस्मः स्थलमितिभस्मः

व्योमेतिभस्मः सर्वंहवाइदं भस्मः मन एतानि चक्षूंसि।

**आचमनम्-**

अन्तर्जानुहस्तःसंहतांगुलिना शुद्धजलं गृहीत्वा मुक्तांगुष्ठकनिष्ठेन

वामेनान्वारब्धपाणिना ब्रह्मतीर्थेन त्रिरपः पिवेत्।

**ॐ केशवाय नमः स्वाहा। ॐ नारायणाय नमः स्वाहा। ॐ माधवाय नमः स्वाहा।**

हस्तप्रक्षालनम् - ॐ हृषीकेशाय नमः ।।

**पवित्रीकरणम्**

अपवित्रःपवित्रोवेत्यस्य वामदेवऋषिरनुष्टुप्छन्दो विष्णुर्देवता बाह्याभ्यन्तर पवित्रीकरणे विनियोगः।

**ॐ अपवित्रःपवित्रो वा सर्वावस्थां गतोऽपि वा।**

**यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरःशुचिः ।।**

पुण्डरीकाक्षःपुनातु ।। पुण्डरीकाक्षःपुनातु ।। पुण्डरीकाक्षःपुनातु ।।

**आसन पवित्रीकरणम्**

पृथ्वीतिमन्त्रस्य मेरूपृष्ठऋषिः सुतलं छन्दः कूर्मो देवता आसन पवित्रीकरणे विनियोगः।

**ॐ पृथ्वित्वयाधृतालोका देवि त्वं विष्णुना धृता।**
**त्वं च धारय मां देवि पवित्रं कुरुचासनम् ।।**

ॐ भूर्भुवःस्वः भूम्यै नमः।

**संकल्पः**

तिथिर्विष्णुस्तथावारो नक्षत्रं विष्णुरेव च।
योगश्च करणंचैव सर्वं विष्णुमयं जगत्।।

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्यश्री ब्रह्मणोहि द्वितीये परार्द्धे विष्णुपदे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भूर्लोके भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गत ब्रह्मावर्तेकदेशे **अवन्तिकायां** पुण्यप्रदेशे **मध्यप्रदेशे श्रीमहाकाल क्षेत्रे इंदौर नगरे रेवती ग्रामे देवी अहिल्या वेदविद्यालये** बौद्धावतारे प्रभवादि षष्ठी संवत्सराणां मध्ये अमुक नाम्नि संवत्सरे उत्तरायणे/दक्षिणायने श्रीभास्करे अमुकऋतौ मासानां मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थितेश्रीचन्द्रे अमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थितेश्रीदेवगुरौ शेषेषु ग्रहेषु यथा यथा राशिस्थानस्थितेषु सत्सु एवं ग्रहगुणगण विशेषेणविशिष्टायां शुभपुण्य तिथौ अमुकगोत्रोत्पन्नोहम् अमुकशर्माहं ममोपात्तदुरितक्षयपूर्वकं श्रीपरमेश्वरप्रीत्यर्थं प्रातः (मध्यान्ह अथवा सायं) सन्ध्योपासनं करिष्ये।

ऋतं चेति त्र्यृचस्य माधुच्छन्दसो ऽघमर्षण ऋषिरनुष्टुप् छन्दो भाववृत्तं दैवतमपामुपस्पर्शने विनियोगः।

**ॐ ऋतंच सत्यंचाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत। ततः समुद्रो अर्णवः।**
**समुद्रादर्णवादधिसंवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवंच पृथिवींचान्तरिक्षमथो स्वः।।**

गायत्रीमन्त्रेणाभिमन्त्रणम् - **ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।**

ॐकारस्य ब्रह्मा ऋषिर्दैवी गायत्री छन्दः परमात्मा देवता सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यश्छन्दांस्यग्निवायुसूर्यबृहस्पतिवरुणेन्द्र विश्वेदेवा देवताः, तत्सवितुरिति विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता, आपोज्योतिरिति शिरसः प्रजापतिर्ऋषिर्यजुश्छन्दो ब्रह्माग्निवायुसूर्या देवताः अनादिष्ट प्रायश्चित्ते प्राणायामे विनियोगः।

**ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्। ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् ।।**

सूर्यश्चमेति नारायण ऋषिः प्रकृतिश्छन्दः सूर्यमन्युमन्युपतयो रात्रिश्च देवता अपामुपस्पर्शने विनियोगः।

**ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु। यत्किंच दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा।।**

आपः पुनन्त्विति नारायण ऋषिरनुष्टुप् छन्द आपः पृथिवी ब्रह्मणस्पतिर्ब्रह्मा च देवता अपामुपस्पर्शने विनियोगः।

**ॐ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम्। यदुच्छिष्टमभोज्यं च यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रह स्वाहा ।।**

अग्निश्चमेति नारायण ऋषिः प्रकृतिश्छन्दो ऽग्निमन्युमन्युपतयो ऽहश्च देवता अपामुपस्पर्शने विनियोगः।

**ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना अहस्तदवलुम्पतु। यत्किंच दुरितं मयि इदमहं माममृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा।।**

आपो हि ष्ठेति त्र्यृचस्य सिन्धुद्वीप ऋषिर्गायत्री छन्द आपो देवता मार्जने विनियोगः।

**ॐ आपो हि ष्ठा मयोभुवः। ॐ ता नऽऊर्जे दधातन । ॐ महेरणाय चक्षसे। ॐ यो वः शिवतमो रसः।**
**ॐ तस्य भाजयतेह नः। ॐ उशतीरिव मातरः। ॐ तस्मा अरं गमाम वः।**
**ॐ यस्य क्षयाय जिन्वथ। ॐ आपो जनयथा च नः ।।**

द्रुपदादिवेत्यश्विसरस्वतीन्द्रा ऋषयोऽनुष्टुप् छन्द आपो देवताः शिरस्सेके विनियोगः।

**ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।**
**पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः ।।**

ऋतं चेति श्रृचस्य माधुच्छन्दसोऽघमर्षण ऋषिरनुष्टुप् छन्दो भाववृत्तं दैवतमघमर्षणे विनियोगः।

**ॐ ऋतंच सत्यंचाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत। ततः समुद्रो अर्णवः।**
**समुद्रादर्णवादधिसंवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।**
**सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवंच पृथिवींचान्तरिक्षमथो स्वः।।**

अन्तश्चरसीति तिरश्चीन ऋषिरनुष्टुप् छन्द् आपो देवता अपामुपस्पर्शने विनियोगः।

**ॐ अन्तश्चरति भूतेषु गुहायां विश्वतोमुखः।**

**त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ।।**

ॐकारस्य ब्रह्मा ऋषिर्दैवी गायत्री छन्दः परमात्मा देवता तिसृणां महाव्याहृतीनां

प्रजापतिऋषिर्गायत्र्युष्णिगनुष्टुब्भश्छन्दांस्यग्निवायुसूर्या देवताः,

तत्सवितुरिति विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता, सूर्यार्घ्यदाने विनियोगः।

**ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ।।**

ब्रह्मस्वरूपिणे सूर्यनारायणाय इदमर्घ्यं दत्तं न मम। रुद्रस्वरूपिणे सूर्यनारायणाय इदमर्घ्यं दत्तं न मम।

विष्णुस्वरूपिणे सूर्यनारायणाय इदमर्घ्यं दत्तं न मम।

ॐ केशवाय नमःस्वाहा। ॐ नारायणाय नमःस्वाहा। ॐ माधवाय नमःस्वाहा।

हस्तप्रक्षालनम्- ॐ हृषीकेशाय नमः।।

**सूर्योपस्थानम्-** उद्वयमिति प्रस्कण्व ऋषिरनुष्टुप्छन्दः सूर्यो देवता, उदुत्यमिति प्रस्कण्व ऋषिर्निनिचृद्गायत्री छन्दः सूर्यो

देवता, चित्रमिति कुत्सांगिरस ऋषिस्त्रिष्टुप्छन्दः सूर्यो देवता,

तच्चक्षुरिति दध्यङ्गा थर्वण ऋषिरेकाधिका ब्राह्मी त्रिष्टुप्छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः।

**ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्।**

**देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्।।**

**ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः।**

**दृशे विश्वाय सूर्यम्।।**

**ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।**

**आप्रा द्यावापृथिवी अन्तरिक्ष सूर्य आत्मा जगतस्तस्थुषश्च ।।**

**ॐ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः**

**शतꣳ श्रृणुयाम शरदः शतं प्र ब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।।**

ॐ हृदयाय नमः। ॐ भूः शिरसे स्वाहा। ॐ भुवः शिखायै वषट्। ॐ स्वः कवचाय हुम् ।
ॐ भूर्भुवः नेत्राभ्यां वौषट् । ॐ भूर्भुवःस्वः अस्त्राय फट्।।

**गायत्र्यावाहनम्**

तेजोऽसीति धामनामासीत्यस्य च परमेष्ठी प्रजापतिर्ऋषिर्यजुस्त्रिष्टुबृगुष्णिहौ
छन्दसी सविता देवता गायत्र्यावाहने विनियोगः।

**ॐ तेजोऽसि शुक्रमस्यमृमसि धाम नामासि प्रियं देवानामनाधृष्टंदेवयजनमसि।।**

**गायत्र्युपस्थानम्**

गायत्र्यसीति विवस्वान् ऋषिः स्वराण्महापंक्तिश्छन्दः परमात्मा देवता गायत्र्युपस्थाने विनियोगः।

**तस्याऽउपस्थानम्  ॐ गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि**
**पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापत्।।**

ॐकारस्य ब्रह्मा ऋषिर्दैवी गायत्री छन्दः परमात्मा देवता तिसृणां महाव्याहृतीनां
प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुब्भश्छन्दांस्यग्निवायुसूर्या देवताः,
तत्सवितुरिति विश्वामित्र ऋषिर्गायत्री छन्दः सविता देवता, सर्वपापक्षयार्थे गायत्रीमहामन्त्र जपे विनियोगः।

**गायत्री ध्यान**

**मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैः**
**युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।**
**गायत्रीं वरदाभयांकुशकशाः शुभ्रं कपालं गुणं**
**शंखं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे।।**

**प्रातः गायत्री ध्यान**

**ॐ बालां विद्यां तु गायत्रीं लोहितां चतुराननाम् ।**
**रक्ताम्बर द्वयो पेतामक्षसूत्रकरां तथा ।।**
**कमण्डलुधरां देवीं हंसवाहन संस्थिताम् ।**
**ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोक निवासिनीम् ।।**

**मध्याह्न गायत्री ध्यान**

**ॐ मध्याह्ने विष्णुरूपां च तार्क्ष्यस्थां पीतवाससाम् ।**

**युवतीं च यजुर्वेदां सूर्यमण्डल संस्थिताम् ।।**

**सायं गायत्री ध्यान**

**ॐ सायाह्ने शिवरूपां च वृद्धां वृषभवाहिनीम् ।**

**सूर्यमण्डलमध्यस्थां सामवेदसमायुताम् ।।**

ॐ देवि गायत्रि त्वं ब्रह्मशापाद्विमुक्ता भव। ॐ देवि गायत्रि त्वं वसिष्ठशापाद्विमुक्ता भव। ॐ देवि गायत्रि त्वं विश्वामित्रशापाद्विमुक्ता भव। ॐ देवि गायत्रि त्वं वरुणशापाद्विमुक्ता भव। ॐ देवि गायत्रि त्वं शुक्रशापाद्विमुक्ता भव।

**अथ जपादौ मुद्रा प्रदर्शनम्।**

सुमुखं सम्पुटं चैव विततं विस्तृतं तथा।

द्विमुखं त्रिमुखं चैव चतुःपंचपुखं तथा।।

षण्मुखाधोमुखं चैव व्यापकांजलिकं तथा।

शकटं यमपाशं च ग्रथितं चोन्मुखोन्मुखम्।।

प्रलम्बं मुष्टिकं चैव मत्स्यः कूर्मो वराहकम्।

सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ।।

एता मुद्राश्चतुर्विंशज्जपादौ परिकीर्तिताः।

एतामुद्रा न जानाति गायत्री निष्फला भवेत्।।

ॐमां माले महामाये सर्वशक्तिस्वरूपिणी।

चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।।

ॐ अविघ्नं कुरु माले त्वं गृण्हामि दक्षिणे करे।

जपकाले च सिद्धयार्थं प्रसीद मम सिद्धये ।।

ॐ अक्षमालाधिपतये सुसिद्धिं देहि देहि सर्वमन्त्रार्थ साधिनि साधय साधय सर्वसिद्धिं परिकल्पय परिकल्पय मे स्वाहा।।

**ॐ भूर्भुवःस्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।**

ॐ सुरभिर्ज्ञानवैराग्यं योनिः शंखोदपंकजम्।

लिंगं निर्वाण मुद्राश्च जपान्तेष्टौ प्रदर्शयेत् ।।

## सूर्यप्रदक्षिणा

विश्वतश्चक्षुरिति भौवन ऋषिस्त्रिष्टुप्छन्दो विश्वकर्मा देवता सूर्यप्रदक्षिणायां विनियोगः।

**ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।**

**सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः।।**

## जपनिवेदनम्

ॐ देवा गातुविद इति मनसस्पतिर्ऋषिर्विराडनुष्टुप्छन्दो वातो देवता जपनिवेदने विनियोगः।

**ॐ देवा गातुविदो गातुं वित्त्वा गातुमित।**

**मनसस्पत इमं देव यज्ञ स्वाहा वाते धाः ।।**

अनेन यथाशक्तिकृतेन गायत्रीजपाख्येन कर्मणा भगवान् सूर्यनारायणः प्रीयतां न मम ।।

उत्तमे शिखरे इति वामदेव ऋषिरनुष्टुप्छन्दो गायत्री देवता गायत्री विसर्जने विनियोगः ।।

**ॐ उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि।**

**ब्राह्मणेभ्यो ऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ।।**

अनेन संध्योपासनाख्येन कर्मणां श्रीपरमेश्वरः प्रीयतां न मम।।

ॐ तत्सद्ब्रह्मार्पणमस्तु ।।

**यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।।**

ॐ विष्णवे नमः। ॐ विष्णवे नमः। ॐ विष्णवे नमः। ।। श्रीविष्णुस्मरणात्परिपूर्णतास्तु ।।

।। इति ।।

****************

# भोजन विधिः

ॐ सत्यं त्वर्तेन परिषिञ्चामि प्रातः। ऋतं त्वा सत्येन परिषिञ्चामि सायं ।

अन्नाभिःस्पर्शनम् :- **तेजोऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियं देवानामनाधृष्टं देवयजनमसि॥**

**आत्मन् अग्नि ध्यानम् :- अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुमृतं म आसन।**

**अर्कस्त्रीधातु रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥**

भूमो बलयः - ॐ भूपतये स्वाहा नमः ॥ ॐ भुवनपतये स्वाहा नमः॥ ॐ भूतानां पतये स्वाहा नमः॥

हस्तेजलमादाय : - **अन्नपते अन्नस्य नो देह्यनमीवस्य शुष्मिणः।**

**प्र प्र दातारंतारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥**

**प्राणाहुतिः -** ॐ प्रणाय स्वाहा ॥ ॐ अपानय स्वाहा ॥ ॐ व्यानाय स्वाहा ॥

ॐ उदानाय स्वाहा ॥ ॐ समानाय स्वाहा ॥

******************

## ॥ नूतनयज्ञोपवीतधारणविधिः ॥

आचम्य, प्राणानायम्य

हस्ते जलमादाय- मम श्रौत स्मार्तकर्मानुष्ठान सिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं नूतन यज्ञोपवीतधारणमहं करिष्ये।

**सूत्रं त्रिगुणी कुर्यात्** -

इदंविष्णुर्विचक्रमे त्रेधा निर्दधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥

**यज्ञोपवीतं प्रक्षाल्य**

**आपो हि ष्ठा मयोभुवस्ता न ऽऊर्जेदधातन । महे रणाय चक्षसे ॥**

**यो वः शिवतमो रसस्तस्य भाजयतेह नः उशतीरिव मातरः ॥**

**तस्माऽअरङ्गमाम वो य स्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥**

दशभिः गायत्रीमन्त्रैः अभिमन्त्र्य तन्तुदेवता आवाहयेत् ।

प्रथमतन्तौ - ॐकाराय नमः ॐकारम् आ० स्था० ।

द्वितीयतन्तौ ॐ अग्नये नमः अग्निम् आ० स्था० ।

तृतीयतन्तौ  नागेभ्यो नमः नागान् आ० स्था० ।

चतुर्थतन्तौ - ॐ सोमाय नमः सोमम् आ० स्था० ।

पञ्चमतन्तौ - ॐ पितृभ्यो नमः पितृन् आ० स्था० ।

षष्ठतन्तौ  प्रजापतये नमः प्रजापतिम् आ० स्था० ।

सप्तमतन्तौ - ॐ अनिलाय नमः अनिलम् आ० स्था० ।

अष्टमतन्तौ ॐ यमाय नमः यमम् आ० स्था० ।

नवमतन्तौ - ॐ विश्वेभ्यो देवेभ्यो नमः विश्वान् देवान् आ० स्था० ।

**ग्रन्थिमध्ये -** ॐ ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ।

ॐ विष्णवे नमः विष्णुम् आ० स्था० । ॐ रुद्राय नमः रुद्रम् आ० स्था० ।

प्रणवाद्यावाहितदेवताभ्यो नमः यथास्थानमहं न्यसामि ।

प्रणवाद्यावाहितदेवताभ्यो नमः इति यथाशक्ति पूजनं कुर्यात्।

**प्रार्थयेत्** - प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम् ।

ब्रह्मत्वसिद्ध्यै  च यशः प्रकाशं जपस्य  सिद्धिं कुरुब्रह्मसूत्रम् ॥

**सूर्याय दर्शयेत् -**

**ॐ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शत  श्रृणुयाम शरदः शतम्प्रब्रवाम शरदः**

**शतमदीनाः स्याम शरदः शतम्भूयश्च  शरदः शतात् ॥**

**हस्ते जलमादाय-** यज्ञोपवीतमितिमन्त्रस्य परमेष्ठी-ऋषिः लिङ्गोक्तादेवताः त्रिष्टुब्छन्दः यज्ञोपवीतधारणे विनियोगः ।

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेयर्त्सहजं पुरस्तात्।**

**आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपतं बलमस्तु वीतेजः।।**

**यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि ॥**

अनेन मन्त्रेण पृथक् पृथक् धारयेत् प्रति यज्ञोपवीत धारणान्ते आचमनं कुर्यात्।

**जीर्ण यज्ञोपवीतत्यागः ।**

एतावद्दिनपर्यन्तं ब्रह्मत्वं धारितं मया ।
जीर्णत्वात्त्वत्परित्यागो गच्छ सूत्र यथासुखम् ॥

अनेन मन्त्रेण जीर्णयज्ञोपवीतं शिरोमार्गेण निःसार्य शुद्धभूमौ त्यजेत् ।
यथाशक्ति गायत्रीमन्त्रजपं कुर्यात्।

हस्ते जलमादाय - अनेन नूतनयज्ञोपवीतधारणाङ्गभूतं कृतेन यथाशक्तिगायत्रीजपकर्मणा श्री सविता देवता प्रीयताम् न मम। पुनर्जलमादाय अनेन नूतनयज्ञोपवीत धारणाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयताम् न मम।

**ॐ विष्णवे नमः ॐ विष्णवे नमः ॐ विष्णवे नमः ।**

॥ इति समाप्तोऽयं ग्रंथ: ॥